

# ॥ चल चायपाने ॥

✍✍✍✍

## संस्कृतकविता

डॉ.हिमांशुगौडः

# ॥ चल चायपाने ॥

*********

मित्रम्मदीयं हि नवीननामा,
द्विजैस्सदा यो गदितस्तिवारी
नब्बू जना यं च वदन्ति भूयः,
स बोधयेन्मां चल चायपाने ॥१॥

प्रभातकाले च दिनान्तकाले,
मध्याह्नकालेऽपि च यः कदाचित्
निद्राम्मदीयामपसार्य वक्ति-
चल चायपाने! चल चायपाने ॥२॥

कार्यस्य विश्रान्तिमवाप्तुकामः
मस्तिष्कसंस्फूर्त्तिमवाप्तुकामः।
शास्त्रस्य तत्त्वं परिलभ्यतां रे!
चल चायपाने! चल चायपाने ॥३॥

काव्यानि यस्मात्परिसंस्फुरन्ति,
खेदश्च शोकः परिणाशमेति
नव्यास्तरङ्गा हृदये सरन्ति,
तस्माद्द्विज!त्वं चल चायपाने ॥४॥

पिबन्ति ये नैव कदापि चायं,
शास्त्रं नवत्त्वेन न चिन्तयन्ति
जीवन्ति तेऽपीह कथं न जाने,

चल चायपाने! चल चायपाने ॥५॥

शास्त्रार्थगोष्ठ्यामपि शोधगोष्ठ्यां
काव्यस्य गोष्ठ्यान्तु विशेषतस्तत्
चायं समैस्सभ्यजनैस्सुपेयं,
चल चायपाने! चल चायपाने ॥६॥

रुष्टो गुरुश्चेद्भगिनी च माता,
भ्राता पिता वा दुहिता च भार्या
शिष्यश्च मित्रं यदि ते द्विज! त्वं,
चायं प्रदेहि द्रुतमेव तेभ्यः ॥७॥

चायं सदा पाययति द्विजो यस्-

स्वसुन्दरीं मित्रजनं प्रियां वा
तस्मान्न खिन्ना भवतीह मुग्धा
उपायसारी रतिमाप्नुते सः ॥८॥

द्विजा अनेके हि मम प्रकोष्ठे,
आयात्य चोच्चस्वरगर्जमानाः
वदन्ति- शास्त्रिन्द्विज काव्यकारिँ-
श्चल चायपाने चल चायपाने ॥९॥

व्हाट्सेपमेवं परिचाल्यमानः
तथैव रे फेसबुकेऽपि मग्नः,
ग्रीवाञ्च नत्वा निजफोनमध्ये
चल चायपाने! चल चायपाने ॥१०॥

स्वप्ने मदीयेऽद्य समेति गान्धी
सदोपनेत्रेण लसत्सुनेत्रः
स्ववेत्रयष्ट्या स च नोदयेन्मां -
चल चायपाने! चल चायपाने ॥११।

पुनश्च स श्रीशिमलानिवासी
प्राप्तोऽभिराजेन्द्रकविः प्रसन्नः
कथं भवान् वै प्रकरोति काव्यं,
पृष्टे मयोक्तं - कुरु चायपानम् ॥१२॥

चायप्रभावाद्भवतीह मोदी,
चायप्रभावादमिताभबच्चनः

चायप्रभावाद्धनवान् मुलायमः
तस्माद्द्विज! त्वं भव चायपायी ॥१३॥

सरस्वती मे पुरतोऽद्य संस्थिता,
दुःखे निमग्नोऽसि कथं हिमांशो
कथं न काव्यं प्रकरोषि रात्रौ,
मातोऽद्य चायं न मया निपीतम् ॥१४॥

प्रबलस्य यज्ञे प्रखरस्य यज्ञे,
द्विज ! त्वमेषीह कथं न भक्त्या?
पृष्टे बुधैस्तत्त्वमिदं समुक्तं -
श्रेष्ठं न चायं मिलतीति तत्र ॥१५॥

चेत्कौमुदीं वाऽपि मनोरमां वा,
चेच्छेखरं विप्र! महच्च भाष्यम्
कण्ठीप्रकर्तुं बुधतां समेतुं
चल चायपाने चल चायपाने ॥१६॥

न देवलोके न च नागलोके
न यक्षलोके न तथाऽऽसुरेऽपि
चायं सुलभ्यं भुवि कर्मलोके,
चल चायपाने चल चायपाने ॥१७॥

दुग्धे घृते नैव मधौ न तक्रे
रुचिर्न धूम्रे न च वा सुरायाम्
कथन्न जानीम मुधा पिपासा-

ग्रस्ता वदामश्चल चायपाने ॥१८॥

केचित्सुरायामपरे च वामा-
ऽधरे धनाम्बौ च रसेषु मग्नाः।
रम्यन्तु चायाऽमृतमेव लोके,
यैर्नैव पीतं भुवि वञ्चितास्ते ॥१९॥

जागर्ति रात्रौ यदि काव्यकारः,
कार्यालये वा लिपिकोऽपि सुस्थः
स्थाने दरोगा विपणौ वणिग्वा
सर्वं हि तच्चायकृतं वदन्ति ॥२०॥

स्वामिन्कथं भागवते गतिस्स्यात्

कथञ्च शब्दप्रवरो द्विजस्स्यात्
कथं प्रचण्डश्श्रुतिधृच्च विप्र-
स्समं हि तत्र्यम्बक! संवदेच्चेत् ॥२१॥

स्मितास्यसञ्चिन्तनपूर्वकञ्च
विलोड्य चित्तस्थसमस्तशास्त्रम्
मुहुर्मुहुर्जप्यरतो यतिस्सो-
ऽब्रवीत् सुचायं पिब हे हिमांशो ॥२२॥

ग्रीष्मे च शैतेऽप्यथवा वसन्ते
मेघावृताकाशसुमङ्गलेऽपि
कार्यञ्च किं त्र्यम्बक किञ्च पेयं,
चायस्य पानं कुरु हे हिमांशो ॥२३॥

दिनेऽपि वा रात्रिरिवाऽवभासे
कृष्णैश्च मेघैः परिवर्षितैश्च
शुभे समे मोदनकार्यजाते
चायं पिबेत्सोमरसेन तुल्यम् ॥२४॥

उल्लूकलोकेऽपि शुकावलोके
काकावलोके च मयूरलोके
गृध्रैर्विलोकैर्निधृतो दिनान्ते
दुग्धं पिबेद्रोक्षुरचूर्णयुक्तम् ॥२५॥

सर्पैस्सदा फुङ्कृतिमानलोके
क्षीरं पिबन्सन्नकुलश्च दृष्टः

दूर्वादिभिर्वृक्षगणैर्वनेषु
श्यामायमानेषु हरित्सु विप्र ॥२६॥

पश्यन्मृगादीन्महिषान्वनस्थान्
चित्ते स्वकीये परिमोदमानः
संसाररूपाण्यपि रञ्जकानि,
भिषग्भूतं चायमिदं पिबेस्त्वम् ॥२७॥

पूजाः विभिन्ना अपि वाऽर्चकाश्च
नैकः कविर्यस्य वचः प्रमाणम्।
चायस्य तत्त्वं निहितं गुहायां
गौडा गता येन स एव पन्थाः ॥२८॥

सायन्तने चारुणताप्रजाते
खेऽर्के तथा पश्चिमदिक्प्रयाते
चेत्प्रेमिका तेऽत्र भवेच्च पार्श्वे
तया सहैवं चल चायपाने ॥२९॥

त्वं पल्सरं वा द्विज रे बुलेटं
चेद् यामहां वा नववस्त्रधारी
आरुह्य याहि द्रुतमेव तत्र
स्फूर्तिप्रदं यत्र भवेत् सुचायम् ॥३०॥

चेच्चन्द्ररात्रौ ह्यपि रिक्तरात्रौ
चेद्वा विवाहस्य सुखार्थि-रात्रौ
यद्वाऽपि कालं परियापणाय

जागर्षि, चायं हि निपीय सुस्थः ॥३१॥

चेन्मेघदूतं बत देवदूतं
चेत्कामदूतं पठति क्वचिद्वा
पूर्णं रसं तत्परिलब्धुकामः
शनैश्शनैः रे कुरु चायपानम् ॥३२॥

श्वत्वे युवत्वेऽप्यथ देवराट्त्वे,
पापैश्च पुण्यैर्यदि रे प्रयासि
रोटीं सुरां वाऽप्यमृतं विहाय
चायस्य पानं कुरु जीवबुद्धे ॥३३॥

कस्यापि शापाद्यदि वानरत्वे

स्वकीयदुष्कर्मवशादथापि
निपत्य दत्तं भुवि चान्नखण्डं
विहाय, चायं पिब रे कपे ! त्वम् ॥३४॥

........

हिमांशुगौडः

लेखनसमयः – सप्तवादने सायङ्काले, दिनाङ्कस्तु विस्मृतः, जनवरी २०१७,रा.सं.सं. भोपालपरिसरस्थे कविभास्करच्छात्रावासे, ११७ सङ्ख्याके कक्षे ।